भावानुवादः। न वक्तीति साधनाभावविधिः। तेन साध्याभावः साधनाभावनियतः ख्यापितो भवतीति। ईदृशी व्याप्तिस्तया व्यतिरेको न सिद्धोऽस्य चार्थस्य प्रसिद्धये दृष्टान्तस्तत्त्वकार्याकरणाद्दुष्टः।

अप्रदर्शितो व्यतिरेको यस्मिन् स तथोक्तः। अनित्यः शब्द इत्यनित्यत्वं साध्यम्। कृतकत्वादिति हेतुः। आकाशवदिति वैधर्म्येण दृष्टान्तः। इह परार्थानुमाने परस्मादर्थः प्रतिपत्तव्यः। स शुद्धोऽपि स्वतो यदि परेणाशुद्धः ख्याप्यते। स तावद्यथा प्रकाशितस्तथा न युक्तो यथा युक्तस्तथा न प्रकाशितः। प्रकाशितश्च हेतुः। अतो वक्तुरपराधादपि परार्थानुमाने हेतुर्दृष्टान्तो वा दुष्टः स्यादपि। न च सादृश्यादसादृश्याद्वा साध्यप्रतिपत्तिरपि तु साध्यनियताद्धेतोः। अतः साध्यनियतो हेतुरन्वयवाक्येन व्यतिरेकवाक्येन च वक्तव्यः। अन्यथा गमको नोक्तः स्यात्। स तथोक्तो दृष्टान्तेन सिद्धो दर्शयितव्यः। तस्माद्दृष्टान्तो नामाऽन्वयव्यतिरेकवाक्यार्थप्रदर्शनः। न चेह व्यतिरेकवाक्यं प्रयुक्तम्। अतो वैधर्म्यदृष्टान्त इहासादृश्यभावेन साधक उपन्यस्तः। न च तथा साधको व्यतिरेकविषयत्वेन। स साधको न च तथोपन्यस्त इति। अतोऽप्रदर्शितव्यतिरेको वक्तुरपराधाद्दुष्टः।

विपरीतो व्यतिरेको यस्मिन्वैधर्म्यदृष्टान्ते स तथोक्तः। तमुदाहरति। यदकृतकमित्यादि। इहान्वयव्यतिरेकवाक्याभ्यां साध्यनियतो हेतुर्दर्शयितव्यः। यदा च साध्यनियतो हेतुर्दर्शयितव्यस्तदा व्यतिरेकवाक्ये साध्याभावः साधनाभावे नियतो

दर्शयितव्यः। एवं हि हेतुः साध्यनियतो दर्शितः स्यात्। यदि तु साध्याभावः साधनाभावे नियतो नाख्यायते साधनसत्तायामपि साध्याभावः संभाव्येत। तथा च साधनं साध्यनियतं न प्रतीयेत। तस्मात्साध्याभावः साधनाभावे नियतो वक्तव्यः। विपरीतव्यतिरेके च साधनाभावः साध्याभावे नियत उच्यते। न साध्याभावः साधनाभावे। तथा हि। यदकृतकमिति साधनाभावमनूद्य तन्नित्यमिति साध्याभावविधिः। ततोऽयमर्थः। अकृतको नित्य एव। तथा च सत्यकृतकत्वं नित्यत्वे साध्याभावे नियतमुक्तं न नित्यत्वं साधनाभावे। ततो न साध्यनियतं हेतुं व्यतिरेकवाक्यमाह। तथा च विपरीतव्यतिरेकोऽपि वक्तुरपराधाद्दुष्टः।

दृष्टान्तदोषानुदाहृत्य दुष्टत्वनिबन्धनत्वं दर्शयितुमाह। न ह्येभिरिति। साध्यनियतहेतुप्रदर्शनाय दृष्टान्ता वक्तव्याः। एभिश्च हेतोः सपक्ष एव सत्त्वं विपक्षे च सर्वत्रासत्त्वमेव यत्सामान्यलक्षणं तन्निश्चयेन न शक्यं दर्शयितुम्। ननु च सामान्यलक्षणं विशेषनिष्ठमेव प्रतिपत्तव्यं न स्वत एवेत्याह विशेषलक्षणं वा। यदि विशेषलक्षणं प्रतिपादयितुं शक्येत। स्यादेव सामान्यलक्षणप्रतिपत्तिः। विशेषलक्षणमेव तु न शक्यमेभिः प्रतिपादयितुम्। तस्मादर्थापत्त्या सामर्थ्येनेति न तेषां निराकरणं द्रष्टव्यम्। साध्यनियतसाधनप्रतीतय उपात्ताः। तदसमर्था दुष्टाः स्वकार्यकरणादिति सामर्थ्यम्। इयता साधनमुक्तम्।

दूषणं वक्तुमाह। दूषणा का द्रष्टव्या। न्यूनतादीनामुक्तिरुच्यते। न येत्युक्तिर्वचनं न्यूनतादिर्वचनम्। दूषणं विवरीतु-

माह । ये पूर्वं न्यूनतादयोऽसिद्धविरुद्धानैकान्तिका उक्तास्तेषामुद्भावनं यद्वचनं तद्दूषणम् । ननु च न्यूनतादयो न विपर्ययसाधनास्तत्कथं दूषणमित्याह । तेन न्यूनतादिवचनेन परेषामिष्टस्यासावर्थस्य तस्य सिद्धिर्निश्चयस्तस्याः प्रतिबन्धान्नावश्यं विपर्ययसाधनादेव दूषणं विरुद्धवदपि तु परस्याभिप्रेतनिश्चयनिबन्धान्निश्चयाभावो भवति । निश्चयविपर्यय इत्यस्ति विपर्ययसिद्धिरिति । उक्ता दूषणाभासा इति । दूषणवदाभासन्त इति दूषणाभासाः । के ते जातयः । जातिशब्दः सादृश्यवचन उत्तरसदृशानि जात्युत्तराणीति । उत्तरस्थानप्रयुक्तत्वादुत्तरसदृशानि जात्युत्तराणि । तदेवोत्तरसादृश्यमुत्तरस्थानप्रयुक्तत्वेन दर्शयितुमाह । अभूतस्यासत्यस्य दोषस्योद्भावनानि । उद्भाव्यत एभिरित्युद्भावनानि वचनानि तानि जात्युत्तराणि । जात्या सादृश्येनोत्तराणि जात्युत्तराणीति ।

कतिपयपदवस्तुव्याख्यया यन्मयाप्तं
कुशलममलमिन्दोरंशुवन्न्यायबिन्दोः ।
पदमजरमवाप्य ज्ञानधर्मोत्तरं त-
ज्जगदुपकृतिमात्रव्यापृतिः स्यामतोऽहम् ॥

समाप्तेयं न्यायबिन्दुटीका कृतिराचार्यधर्मोत्तरस्य ॥०॥

सहस्रमेकं श्लोकानां तथा शतचतुष्टयम् ।
सप्तसप्ततिसंयुक्तं निपुणं परिपिण्डितम् ॥

# न्यायबिन्दुः ।

## प्रथमः परिच्छेदः ।

सम्यग्ज्ञानपूर्विका सर्वपुरुषार्थसिद्धिरिति तद्व्युत्पाद्यते । द्विविधं सम्यग्ज्ञानं प्रत्यक्षमनुमानं च । तत्र प्रत्यक्षं कल्पनापोढमभ्रान्तम् । अभिलापसंसर्गयोग्यप्रतिभासप्रतीतिः कल्पना तया रहितम् । तिमिराशुभ्रमणनौयानसंक्षोभाद्यनाहितविभ्रमं ज्ञानं प्रत्यक्षम् ।

तच्चतुर्विधम् । इन्द्रियज्ञानस्वविषयानन्तरविषयसहकारिणेन्द्रियज्ञानेन समनन्तरप्रत्ययेन जनितं तत् । मनोविज्ञानं सर्वं चित्तचैत्तानामात्मसंवेदनं भूतार्थभावनाप्रकर्षपर्यन्तजं योगिज्ञानं चेति ।

तस्य विषयः स्वलक्षणम् । यस्यार्थस्य संनिधानासंनिधानाभ्यां ज्ञानप्रतिभासभेदस्तत्स्वलक्षणम् । तदेव परमार्थसत् । अर्थक्रियासामर्थ्यलक्षणत्वाद्वस्तुनः । अन्यत्सामान्यलक्षणं सो ऽनुमानस्य विषयस्तदेव च प्रत्यक्षं ज्ञानं प्रमाणफलमर्थप्रतीतिरूपत्वात् । अर्थसारूप्यमस्य प्रमाणं तद्वशादर्थप्रतीतिसिद्धेरिति ॥

प्रथमः परिच्छेदः ॥

## द्वितीयः परिच्छेदः ।

अनुमानं द्विधा। स्वार्थं परार्थं च। तत्र स्वार्थं त्रिरूपाल्लिङ्गाद्यदनुमेये ज्ञानं तदनुमानम्। प्रमाणफल-व्यवस्थाऽत्रापि प्रत्यक्षवत्। त्रैरूप्यं पुनर्लिङ्गस्यानुमेये सत्त्वमेव। सपक्ष एव सत्त्वम्। असपक्षे चासत्त्वमेव निश्चितम्।

अनुमेयो ऽत्र जिज्ञासितविशेषो धर्मी। साध्यधर्म-सामान्येन समानो ऽर्थः सपक्षः। न सपक्षो ऽसपक्षः। ततो ऽन्यस्तद्विरुद्धस्तदभावश्चेति त्रिरूपाणि च। त्रीण्येव च लिङ्गानि। अनुपलब्धिः स्वभाव-कार्ये चेति तत्रानुपलब्धिर्यथा न प्रदेशविशेषे क्वचिद्घट उपलब्धि-लक्षणप्राप्तस्यानुपलब्धेरिति। उपलब्धिलक्षणप्राप्तिरुप-लम्भप्रत्ययान्तरसाकल्यं स्वभावविशेषश्च। यः स्वभावः सत्स्वन्येषूपलम्भप्रत्ययेषु यत्प्रत्यक्ष एव भवति स स्वभावः। स्वभावः स्वसत्तामात्रभाविनि साध्यधर्मे हेतुः। यथा वृक्षोऽयं शिंशपात्वादिति। कार्यं यथाग्निरत्र धूमा-दिति। अत्र द्वौ वस्तुसाधनौ। एकः प्रतिषेधहेतुः।

स्वभावप्रतिबन्धे हि सत्यर्थो ऽर्थं गमयेत् । तदप्रतिबद्धस्य तदव्यभिचारनियमाभावात् । स च प्रतिबन्धः साध्ये ऽर्थे लिङ्गस्य वस्तुनस्तादात्म्यात्साध्यार्थादुत्पत्तेश्च । अतत्स्वभावस्यातदुत्पत्तेश्च तत्राप्रतिबद्धस्वभावत्वात् । ते च तादात्म्य-तदुत्पत्ती स्वभाव-कार्ययोरेवेति । ताभ्यामेव वस्तुसिद्धिः । प्रतिषेधसिद्धिरपि यथोक्ताया एवानुपलब्धेः। सति वस्तुनि तस्या असंभवात्। अन्यथा चानुपलब्धिलक्षणप्राप्तेषु देशकालस्वभावविप्रकृष्टेष्वात्मप्रत्यक्षनिवृत्तेरभावनिश्चयाभावात्। अमूढस्मृतिसंस्कारस्यातीतस्य वर्तमानस्य च प्रतिपत्तृप्रत्यक्षस्य निवृत्तिरभावव्यवहारसाधनी । तस्या एवाभावनिश्चयात् । सा च प्रयोगभेदादेकादशप्रकारा ।

स्वभावानुपलब्धिर्यथा । नात्र धूम उपलब्धिलक्षणप्राप्तस्यानुपलब्धेरिति ।

कार्यानुपलब्धिर्यथा । नेहाप्रतिबद्धसामर्थ्यानि धूमकारणानि सन्ति धूमाभावात् ।

व्यापकानुपलब्धिर्यथा । नात्र शिंशपा वृक्षाभावादिति ।

स्वभावविरुद्धोपलब्धिर्यथा । नात्र शीतस्पर्शो ऽग्नेरिति ।

विरुद्धकार्योपलब्धिर्यथा । नात्र शीतस्पर्शो धूमादिति ।

विरुद्धव्याप्तोपलब्धिर्यथा । न ध्रुवभावी भूतस्यापि भावस्य विनाशो हेत्वन्तरापेक्षणादिति ।

कार्यविरुद्धोपलब्धिर्यथा । नेहाप्रतिबद्धसामर्थ्यानि शीतकारणानि सन्त्यग्नेरिति ।

व्यापकविरुद्धोपलब्धिर्यथा । नात्र तुषारस्पर्शोऽग्नेरिति ।

कारणानुपलब्धिर्यथा । नात्र धूमोऽग्न्यभावादिति ।

कारणविरुद्धोपलब्धिर्यथा । नास्य रोमहर्षादिविशेषाः संनिहितदहनविशेषत्वादिति ।

कारणविरुद्धकार्योपलब्धिर्यथा । न रोमहर्षादिविशेषयुक्तपुरुषवानयं प्रदेशो धूमादिति ।

इमे सर्वे कार्यानुपलब्ध्यादयो दशानुपलब्धिप्रयोगाः स्वभावानुपलब्धौ संग्रहमुपयान्ति । पारंपर्येणार्थान्तरविधिप्रतिषेधाभ्यां प्रयोगभेदे ऽपि प्रयोगदर्शनाभ्यासात्स्वयमप्येवं व्यवच्छेदप्रतीतिर्भवतीति स्वार्थे ऽप्यनुमाने ऽस्याः प्रयोगनिर्देशः । सर्वत्र चास्यामभावव्यवहारसाधन्यामनुपलब्धौ येषां स्वभावविरुद्धा-





दीनामुपलब्ध्या कारणादीनामनुपलब्ध्या च प्रतिषेध उक्तस्तेषामुपलब्धिलक्षणप्राप्तानामेवोपलब्धिरनुपलब्धिश्च वेदितव्या। अन्येषां विरोधकार्यकारणभावासिद्धेः ।

विप्रकृष्टविषयानुपलब्धिः प्रत्यक्षानुमानानिवृत्तिलक्षणा संशयहेतुः प्रमाणनिवृत्तावप्यर्थाभावासिद्धेरिति ॥

इति द्वितीयः परिच्छेदः ।



## तृतीयः परिच्छेदः।

त्रिरूपलिङ्गाख्यानं परार्थानुमानम्। कारणे कार्योपचारात्। तद्द्विविधं प्रयोगभेदात्। साधर्म्यवद्वैधर्म्यवच्चेति। नानयोरर्थतः कश्चिद्भेदो ऽन्यत्र प्रयोगभेदात्। तत्र साधर्म्यवद्यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते सो ऽसद्व्यवहारविषयः सिद्धः। यथाऽन्यः कश्चिद्दृष्टः शशविषाणादिर्नोपलभ्यते च क्वचित्प्रदेशविशेष उपलब्धिलक्षणप्राप्तो घट इति तथा स्वभावहेतोः प्रयोगः। यत्सत्तत्सर्वमनित्यं यथा घटादिरिति। शुद्धस्य स्वभावहेतोः प्रयोगः। यदुत्पत्तिमत्तदनित्यमिति। स्वभावभूतधर्मभेदेन स्वभावस्य प्रयोगः। यत्कृतकं तदनित्यमित्युपाधिभेदेन। अपेक्षितपरव्यापारो हि भावः स्वभावनिष्पत्तौ कृतक इति। एवं प्रत्ययभेदभेदित्वादयो द्रष्टव्याः। सन्नुत्पत्तिमान्कृतको वा शब्द इति पक्षधर्मोपदर्शनं सर्व एते साधनधर्मा यथास्वं प्रमाणैः सिद्धसाधनधर्ममात्रानुबन्ध एव साध्यधर्मेऽवगन्तव्याः। तत्स्वभावत्वात्स्वभावस्य च हेतुत्वात्। वस्तुतस्तयोस्तादात्म्यात्तन्निष्पत्तावनिष्पन्नस्य तत्स्वभावत्वाभावाद्-

व्यभिचारसंभवाच्च। कार्यहेतोरपि प्रयोगः। धूमस्तत्राग्निर्यथा महानसादावस्ति चेह धूम इति। इहापि सिद्ध एव। कार्यकारणभावे कारणे साध्ये कार्यहेतुर्वक्तव्यः। वैधर्म्यवतः प्रयोगो यत्सदुपलब्धिलक्षणप्राप्तं तदुपलभ्यत एव। यथा नीलादिविशेषः। न चैवमिहोपलब्धिलक्षणप्राप्तस्य सत उपलब्धिर्घटस्येत्यनुपलब्धिप्रयोगः। असत्यनित्यत्वे नास्ति सत्त्वमुत्पत्तिमत्त्वं कृतकत्वं वा। असंश्च शब्द उत्पत्तिमान्कृतको वेति स्वभावहेतोः प्रयोगः। असत्यग्नौ न भवत्येव धूमो ऽत्र चास्तीति कार्यहेतोः प्रयोगः। साधर्म्येणापि हि प्रयोगे ऽर्थाद्वैधर्म्यगतिरिति। असति तस्मिन्साध्ये न हेतोरन्वयाभावात्। तथा वैधर्म्येणाप्यन्वयगतिः। असति तस्मिन्साध्यभावे हेत्वभावस्यासिद्धेः। न हि स्वभावप्रतिबन्धे सत्येकस्य निवृत्तावपरस्य नियमेन निवृत्तिः। स च द्विप्रकारः। सर्वस्य तादात्म्यलक्षणस्तदुत्पत्तिलक्षणश्चेत्युक्तम्। तेन हि निवृत्तिं कथयता प्रतिबन्धो दर्शनीयः। तस्मान्निवृत्तिवचनमाक्षिप्तप्रतिबन्धोपदर्शनमेव भवति। यच्च प्रतिबन्धोपदर्शनं सदेवान्वयवचनमित्येकेनापि वाक्येनान्वयमुखेन व्यतिरेकमुखेन वा प्रयुक्तेन सपक्षाऽसपक्षयोर्लिङ्गस्य सदसत्त्वख्यापनं कृतं

भवतीति नावश्यवाक्यद्वयप्रयोगः। अनुपलब्धावपि यत्सदुपलब्धिलक्षणप्राप्तं तदुपलभ्यत एवेत्युक्ते ऽनुपलभ्यमानं तादृशमसदिति प्रतीतेरन्वयसिद्धिः। द्वयोरप्यनयोः प्रयोगे ऽवश्यं पक्षनिर्देशः। यस्मात्साधर्म्यवत्प्रयोगे ऽपि यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते सो ऽसद्व्यवहारविषयः। नोपलभ्यते चात्रोपलब्धिलक्षणप्राप्तो घट इत्युक्ते सामर्थ्यादेव नेह घट इति भवति। तथा वैधर्म्यवत्प्रयोगे ऽपि यः सद्व्यवहारविषय उपलब्धिलक्षणप्राप्तः स उपलभ्यत एव न तथाच तादृशो घट उपलभ्यत इत्युक्ते सामर्थ्यादेव नेह सद्व्यवहारविषय इति भवति।

कीदृशः पुनः पक्ष इति निर्देश्यः। स्वरूपेणैव स्वयमिष्टो निराकृतः पक्ष इति। स्वरूपेणेति साध्यत्वेनेष्टः। स्वरूपेणैवेति साध्यत्वेनेष्टो न साधनत्वेनापि। यथा शब्दस्यानित्यत्वे साध्ये चाक्षुषत्वं हेतुः। शब्दे ऽसिद्धत्वात्साध्यं न पुनस्तदिह साध्यत्वेनैवेष्टं साधनत्वेनाप्यभिधानात्। स्वयमिति वादिना यस्तदा साधनमाह। एतेन यद्यपि क्वचिच्छास्त्रे स्थितसाधनमाह। तच्छास्त्रकारेण तस्मिन्धर्मिण्यनेकधर्माभ्युपगमे ऽपि यस्तदा तेन वादिना धर्मः स्वयं साधयितुमिष्टः स एव साध्यो

नेतर इत्युक्तं भवति। इष्ट इति यत्रार्थे विवादेन साधनमुपन्यस्तं तस्य सिद्धिमिच्छता सो ऽनुक्तो ऽपि वचनेन साध्यस्तदधिकरणत्वाद्विवादस्य। यथा परार्थाश्चक्षुरादयः संघातत्वाच्छयनासनाद्यङ्गवदिति। अत्रात्मार्था इत्यनुक्तावप्यात्मार्थता ऽनेनोक्तमात्रमेव साध्यमित्युक्तं भवति। अनिराकृत इति। एतल्लक्षणयोगे ऽपि यः साधयितुमिष्टो ऽप्यर्थः प्रत्यक्षानुमानप्रतीतिस्ववचनैर्निराक्रियते न स पक्ष इति प्रदर्शनार्थं तत्र प्रत्यक्षनिराकृतो यथा अश्रावणः शब्द इति। अनुमाननिराकृतो यथा नित्यः शब्द इति। प्रतीतिनिराकृतो यथा अचन्द्रः शशीति। स्ववचननिराकृतो यथा नानुमानं प्रमाणम्। इति चत्वारः पक्षाभासा निराकृता भवन्ति। सिद्धस्यासिद्धस्यापि साधनत्वेनाभिमतस्य स्वयं वादिना तदा साधयितुमनिष्टस्योक्तमात्रस्य निराकृतस्य च विपर्ययेण साध्यस्तेनैव स्वरूपेणाभिमतो वादिन इष्टो निराकृतः पक्ष इति पक्षलक्षणमवद्यं दर्शितं भवति। त्रिरूपलिङ्गाख्यानं परार्थानुमानमित्युक्तम्।

तत्र त्रयाणां रूपाणामेकस्यापि रूपस्यानुक्तौ साधनाभास उक्तावप्यसिद्धौ संदेहे वा प्रतिपाद्यप्रति-

पादकयोरेकस्य रूपस्य धर्मिसंबन्धस्यासिद्धौ संदेहे चासिद्धो हेत्वाभासः। यथा अनित्यः शब्द इति साध्ये चाक्षुषत्वमुभयासिद्धम्। चेतनास्तरव इति साध्ये सर्वत्वगपहरणे मरणं प्रतिवाद्यसिद्धं विज्ञानेन्द्रियायुर्निरोधलक्षणस्य मरणस्यानेनाभ्युपगमात्तस्य च तरुष्वसंभवात्। अचेतनाः सुखादय इति साध्य उत्पत्तिमत्त्वमनित्यं वा सांख्यस्य स्वयं वादिनोऽसिद्धम्। तथा स्वयं तदाश्रयणस्य वा संदेहेऽसिद्धः। यथा बाष्पादिभावेन संदिह्यमानो भूतसंघातोऽग्निसिद्धावुपदिश्यमानः संदिग्धासिद्धः। यथेह निकुञ्जे मयूरः केकायितादिति तदापातदेशविभ्रमे। धर्म्यसिद्धावप्यसिद्धो यथा सर्वगत आत्मेति साध्ये सर्वत्रोपलभमानगुणत्वम्। तथैकस्य रूपस्यासपक्षे सत्त्वस्यासिद्धावनैकान्तिको हेत्वाभासः। यथा शब्दस्यानित्यत्वादिके धर्मे साध्ये प्रमेयत्वादिको धर्मः सपक्ष-विपक्षयोः। सर्वत्रैकदेशे वा वर्तमानस्तथास्यैव रूपस्य संदेहेऽप्यनैकान्तिक एव। यथा सर्वज्ञः कश्चिद्विवक्षितः पुरुषो रागादिमान् वेति साध्ये वक्तृत्वादिको धर्मः संदिग्धविपक्षव्यावृत्तिकः। सर्वत्रैकदेशे वा सर्वज्ञो वक्ता नोपलभ्यत इति। एवंप्रकारस्यानुपलम्भस्या-

इच्छ्यात्मविषयत्वेन संदेहे हेतुत्वात्। असर्वज्ञ-विपर्य्ययाद्वक्तृत्वादेर्व्यावृत्तिः संदिग्धा। वक्तृत्व-सर्वज्ञ-त्वयोर्विरोधाभावाच्च। यः सर्वज्ञः स वक्ता न भवती-त्यदर्शने ऽपि व्यतिरेको न सिध्यति। संदेहाद्द्विविधो हि पदार्थानां विरोधः। अविकलकारणस्य भवतो-ऽन्यभावः। अभावाद्विरोधगतिः। शीतोष्णस्पर्शवत्। परस्परपरिहारस्थितलक्षणतया वा भाववत्। स च द्विविधो ऽपि विरोधो वक्तृत्व-सर्वज्ञत्वयोर्न संभवति। न चाविरुद्धविधेरनुपलब्धावप्यभावगतिः। रागादीनां वचनादेश्च कार्य्यकारणभावासिद्धेः। अर्थान्तरस्य वा कारणस्य निवृत्तौ न वचनादेर्निवृत्तिरिति संदिग्ध-व्यतिरेको ऽनैकान्तिको वचनादिः। द्वयो रूपयो-र्विपर्य्ययसिद्धौ विरुद्धः। कयोर्द्वयोः सपक्षे सत्त्वस्य सपक्षे चासत्त्वस्य यथा कृतकत्वं प्रयत्नानन्तरीयकत्वं च नित्यत्वे साध्ये विरुद्धो हेत्वाभासः। अनयोः सपक्षे ऽसत्त्वमस-पक्षे च सत्त्वमिति विपर्य्ययसिद्धिः। एतौ च साध्यविप-र्य्ययसाधनाद्विरुद्धौ। तत्र च तृतीयो ऽपीष्टविघातकृद्वि-रुद्धः। यथा परार्थाश्चक्षुरादयः संघातत्वाच्छयनाशना-द्यङ्गवदिति। तदिष्टासंहतपारार्थ्यविपर्य्ययसाधना-द्विरुद्धः स इह कस्मान्नोक्तः। अनयोरेवान्तर्भावात्। न

न्वयमाभ्यां साध्यविपर्ययसाधनत्वेन भिद्यते। न ह्यीष्टो-क्तयोः साध्यत्वेन कश्चिद्विशेष इति द्वयो रूपयोरेकस्या-सिद्धावपरस्य च संदेहे ऽनैकान्तिकः। यथा वीतरागः कश्चित्सर्वज्ञो वा वक्तृत्वादिति। व्यतिरेको ऽत्रासिद्धः। संदिग्धो ऽन्वयः। सर्वज्ञ-वीतरागयोर्विप्रकर्षाद्वचनादे-स्तत्र सत्त्वमसत्त्वं वा संदिग्धमनयोरेव द्वयो रूपयो संदेहे ऽनैकान्तिकः। सात्मकं जीवच्छरीरं प्राणादि-मत्त्वादिति। न हि सात्मकनिरात्मकाभ्यामन्यो राशि-रस्ति। यत्र प्राणादिर्वर्तते। आत्मनो वृत्ति-व्यवच्छेदाभ्यां सर्वसंग्रहात्। नाप्यनयोरेकत्र वृत्ति-निश्चयः। सात्मकत्वेन निरात्मकत्वेन वा प्रसिद्धे प्राणादेरसिद्धिः। तस्माज्जीवच्छरीरसंबन्धी प्राणादिः सात्मकादनात्मकाच्च सर्वस्माद्व्यावृत्तत्वेनासिद्धेः। ताभ्यां न व्यतिरिच्यते न तत्राऽन्वेति। एकात्मन्यप्यसिद्धेः। नापि सात्मकान्निरात्मकाच्च तस्यान्वयव्यतिरेकयोरभाव-निश्चयः। एकाभावनिश्चयस्यापराभावनान्तरीयक-त्वात्। अन्वयव्यतिरेकयोरन्योन्यव्यवच्छेदरूपत्वात्। अत एवान्वयव्यतिरेकयोः संदेहादनैकान्तिकः साध्ये-तरयोरतो निश्चयाभावात्। एवं त्रयाणां रूपाणा-मेकैकस्य द्वयोर्द्वयोर्वा रूपयोरसिद्धौ संदेहे च यथा-

योगमसिद्धविरुद्धानैकान्तिकास्त्रयो हेत्वाभासाः। विरुद्धाव्यभिचार्यपि संशयहेतुरुक्तः। स इह कस्मान्नोक्तो ऽनुमानविषये ऽसंभवात्। न हि संभवो ऽस्ति कार्यस्वभावयोरुक्तलक्षणयोरनुपलम्भस्य च विरुद्धतायाः। न चान्यो ऽव्यभिचारी। तस्मादवस्तुदर्शनबलप्रवृत्तमागमाश्रयमनुमानमाश्रित्य तदर्थविचारेषु विरुद्धाव्यभिचारी साधनदोष उक्तः। शास्त्रकाराणामर्थेषु भ्रान्त्या विपरीतस्य स्वभावोपसंहारसंभवात्। न ह्यस्य संभवो यथावस्थितवस्तुस्थितिष्वात्मकार्येष्वनुपलम्भेषु। तत्रोदाहरणं यत्सर्वदेशावस्थितैः स्वसंबन्धिभिः संबध्यते तत्सर्वगतं यथाकाशमभिसंबध्यते सर्वदेशावस्थितैः स्वसंबन्धिभिर्युगपत्सामान्यमिति। तत्संबन्धिस्वभावमात्रानुबन्धिनी तद्देशसंनिहितस्वभावता। न हि यो यत्र नास्ति स तद्देशमात्मना व्याप्नोतीति स्वभावहेतुप्रयोगः। द्वितीयो ऽपि प्रयोगो यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते न तत्तत्रास्ति। तद्यथा। क्वचिदविद्यमानो घटो नोपलभ्यते चोपलब्धिलक्षणप्राप्तं सामान्यं व्यक्त्यन्तरालेष्विति। अयमनुपलम्भप्रयोगः स्वभावश्च परस्परविरुद्धार्थसाधनादेकत्र संशयं जनयतः। त्रिरूपो हेतुरुक्तः। तावतैवार्थप्रतीतिरिति न पृथग्दृष्टान्तो नाम

साधनावयवः कश्चित्। तेनास्य लक्षणं पृथगुच्यते गतार्थत्वात्। हेतोः सपक्ष एव सत्त्वमसपक्षाच्च सर्वतो व्यावृत्तरूपमुक्तमभेदेन पुनर्विशेषेण कार्यस्वभावयोर्जन्म तन्मात्रानुबन्धौ दर्शनीयावुक्तौ। तच्च दर्शयता यत्र धूमस्तत्राग्निरसत्यग्नौ न क्वचिद्धूमो यथा महानसेतरयोः। यत्र कृतकत्वं तत्रानित्यत्वमनित्यत्वाभावे कृतकत्वासंभवो यथा घटाकाशयोरिति दर्शनीयम्। न ह्यन्यथा सपक्षविपक्षयोः सदसत्त्वे यथोक्तप्रकारे शक्ये दर्शयितुम्। तत्कार्यतानियमः कार्यलिङ्गस्य स्वभावलिङ्गस्य च स्वभावेन व्याप्तिः। अस्मिंश्चार्थे दर्शिते दर्शित एव दृष्टान्तो भवति। एतावन्मात्ररूपत्वात्तस्येति। एतेनैव दृष्टान्तदोषा अपि निरस्ता भवन्ति। यथा नित्यः शब्दो ऽमूर्तत्वात्। कर्मवत्परमाणुवद्घटवदिति। साध्यसाधनधर्मोभयविकलास्तथा संदिग्धसाध्यधर्मादयश्च यथा रागादिमानयं वचनाद्रथ्यापुरुषवत्। मरणधर्मोऽयं पुरुषो रागादिमत्त्वाद्रथ्यापुरुषवत्। असर्वज्ञोऽयं रागादिमत्त्वाद्रथ्यापुरुषवदिति। अनन्वयो ऽप्रदर्शितान्वयश्च यथा यो वक्ता स रागादिमानिष्टपुरुषवत्। अनित्यः शब्दः कृतकत्वाद्घटवदिति। तथा विपरीतान्वयो यदनित्यं तत्कृतकमिति साधर्म्येण

वैधर्म्येणापि परमाणुवत्कर्मवदाकाशवदिति साध्याद्य-व्यतिरेकिणः। तथा संदिग्धसाध्यव्यतिरेकादयो यथा सर्वज्ञाः कपिलादयोऽनाप्ता वा। अविद्यमानसर्वज्ञ-ताप्ततालिङ्गभूतप्रमाणातिशयशासनत्वादिति। अत्र वैधर्म्योदाहरणं यः सर्वज्ञ आप्तो वा स ज्योतिर्ज्ञाना-दिकमुपदिष्टवान्। तद्यथा ऋषभवर्धमानादिरिति। तत्रासर्वज्ञतानाप्ततयोः साध्यधर्मयोः संदिग्धो व्यति-रेकः। संदिग्धसाधनव्यतिरेको यथा न त्रयीविदा ब्राह्मणेन ग्राह्यवचनः कश्चित्पुरुषो रागादिमत्त्वा-दिति। अत्र वैधर्म्योदाहरणं ये ग्राह्यवचना न ते रागादिमन्तस्तद्यथा गौतमादयो धर्मशास्त्राणां प्रणे-तार इति। गौतमादिभ्यो रागादिमत्त्वस्य साधन-धर्मस्य व्यावृत्तिः। संदिग्धासंदिग्धोभयव्यतिरेको यथा। अवीतरागाः कपिलादयः परिग्रहाग्रहयोगा-दिति। अत्र वैधर्म्येणोदाहरणं यो वीतरागो न तस्य परिग्रहाग्रहो यथा ऋषभादेरिति। ऋषभादेरवीत-रागत्वपरिग्रहाग्रहयोगयोः साध्यसाधनधर्मयोः संदिग्धो व्यतिरेकः। अव्यतिरेको यथा अवीतरागो वक्तृत्वात्। वैधर्म्योदाहरणं यत्र वीतरागत्वं नास्ति स वक्ता। यथोपलखण्ड इति। यद्यप्युपलखण्डादुभयं

व्यावृत्तया सर्वो वीतरागो न वक्तीति व्याप्त्या व्यतिरेकासिद्धेरव्यतिरेकः। अप्रदर्शितव्यतिरेको यथा अनित्यः शब्दः कृतकत्वादाकाशवदिति। वैधर्म्येणापि विपरीतव्यतिरेको यथा यदकृतकं तन्नित्यं भवतीति। न ह्येभिर्दृष्टान्ताभासैर्हेतोः सामान्यलक्षणं सपक्ष एव सत्त्वं विपक्षे च सर्वत्रासत्त्वमेव निश्चयेन शक्यं दर्शयितुं विशेषलक्षणं वा। तदर्थापत्त्यैषां निरासो वेदितव्यः। दूषणा न्यूनतायुक्तिः। ये पूर्वं न्यूनतादयः साधनदोषा उक्तास्तेषामुद्भावनं दूषणं तेन परेष्टार्थसिद्धिप्रतिबन्धात्। दूषणाभासास्तु जातयः। अनुभूतदोषोद्भावनानि जात्युत्तराणीति।

इति तृतीयः परिच्छेदः समाप्तः।

न्यायबिन्दुः समाप्तः॥

---

# CRITICAL NOTE.



p. 1, B prefixes ओं नमः सर्वज्ञाय. l. 5. B सम्यग्ज्ञानपूर्विके-त्यादिना. l. 6, B omits चेति. l. 7, स्वाभिधेय०. B अभिधेय०. l. 8, अतस्तन्न निरूप्यते : this was printed from conjecture, A omitting न ; B has the न. l. 8, B अभिधेये तु निःप्रयो-जने तत्प्रतिपत्तये. l. 12, तत्प्रतिपत्त्यर्थं, B तत्प्रतिपत्तये.

p. 2, l. 6, उपायो व्युत्पादनस्य, B उपयोग्युत्पादनस्य. l. 7, B वाच्यं. l. 8, B सामर्थ्यं.—एवं तु वदत् ; these letters are very indistinct in A ; B confirms the conjectural text. l. 10, read प्रयोजनपदं with B. l. 12, B. ततश्च. l. 14, B व्युत्पाद्यमानानां. l. 16, B omits इदं. 1. 20, B omits अपि. l. 23, write ०प्रदेश.

p. 3, l. 2, put the stop after प्रेक्षावतां. l. 3, अनर्थ-संशयः, B adds अपि. l. 4, B आख्यातृणां.—B कौडाद्यर्थं. l. 9, B अवरहतद्वाक०. l. 10, अतो वा प्रकरणात् ; this was printed from conjecture ; A seems to read अतोऽन्यप्रकर-णात् ; B has भावाप्रकरणात् ( sic ). l. 11, संभाव्येत ; B adds the numeral 5 ; so also with the preceding 4 cases. 1. 13, अभिधेयादिषु ; B adds सत्तेषु ( sic ), apparently for उक्तेषु.—B omits तु. 1. 15, B अभिसंवादसंज्ञानं ( sic ). 1. 17, प्रदर्शितमर्थं, B prefixes स्वयं. l. 21, विज्ञानं, B ज्ञानं. 1. 21, B omits च.

p. 4, l. 1, अत एव; B adds च. l. 3, तच्चैवार्थे, B तच्चैव चार्थे. l. 5, प्रवृत्तिविषयौ॰, B प्रवृत्तिविषयः. l. 9, लिङ्गसंबन्धं; read लिङ्ग-संबद्धं with B; A लिंगसंवंवं (sic). l. 10, नियतस्य, B नियत॰. l. 11, आदर्शयत्, B उपदर्शयत्. l. 12, प्रदर्शितः, B दर्शि: l. 18, B writes अत्यंतविपरीतभावाभादानि (sic). l. 19, B omits, अर्थक्रियासमर्थ. l. 20, तदेव, B adds तेन. l. 22, अर्थाधिगमात्मकं; B writes अर्थाविज्ञियासमर्थवस्त्वधिगमात्मकत्वं.

p. 5, l. 3, ॰संसर्गः, write संसर्गैः; A संसर्ग्रः (sic); B संसर्गैः (sic).—अन्याकारवद्वस्तु॰, B अन्याकारवस्तु॰. l. 5, कुम्बिका॰, (A कुंविका), B., l. 9, ननु, B adds च. l. 13, तदेव, B adds तेन. l. 16, कारणशब्दोपादाने was printed from conjecture, A having ॰शब्दापादाने; it is now confirmed by B. l. 17, मन्यते; B writes गम्यत (sic). l. 18, तयोः; B adds मध्ये. l. 21, अर्थक्रियानिर्भासे. B अर्थक्रियानिर्भासात्. l. 22, प्रवृत्तिः; read प्राप्तिः with B.

p. 6, l. 2, ज्ञाने, B ज्ञाते.—अर्थे ज्ञाते, read अर्थिनः with B; the reading in A cannot be made out. l. 7, उपेक्षणीयः; B adds अपि. l. 11, B omits इति. l. 13, वृत्तो न; B adds च. l. 15, ॰निबन्धनैवेति; B omits एव. l. 21, ॰सिद्धि॰, B ॰सिद्धेः. l. 22, यावद्ब्रूयात्, B writes यावद्ब्रूया (sic) या काचित्पुरुष॰.—सम्यग्ज्ञान॰, B सा सम्यग्ज्ञान॰.

p. 7, l. 1, B omits सा. l. 3, तद्व्युत्पाद्यते, B तत्सम्यग्ज्ञान व्युत्पाद्यते. l. 6, B omits व्युत्पाद्यते. l. 8, द्वौ विधौ, B द्वे विधे. l. 9, द्वे, B adds एव. l. 10, व्यक्तिभेदे, B भेदे. l. 11, सकल-व्यक्त्यनुयायि was printed from conjecture, the fourth and fifth aksharas having been destroyed; it is con-

firmed by B. l. 13, अप्रवर्तिते ; B adds तु. l. 15, द्विविधं : read द्वैविध्यं with A and B. l. 19, अध्याश्रितत्वेन was printed from conjecture, A having अलध्याश्रितत्वेन; it is confirmed by B. l. 20, लक्ष्यते, B लभ्यते. l. 22, ०ज्ञानं, B ०विज्ञानं.

p. 8, l. 7, गृहीते, B गृहीत०. l. 13, एकदेशः, B एकदेश-निर्देशः. l. 14, प्रत्यक्षं, B प्रत्यक्षत्वं.—B omits च. l. 15, तत्कल्पनापोढाभ्रान्तत्व०, B तत्कल्पनापोढभ्रान्तत्व०. l. 19, सिद्धं, B प्रसिद्धं.—B writes तदनकल्पना०. l. 22, अर्थक्रियाक्षमं, B adds च.

p. 9, l. 1, ०धर्मात्मकं, write वर्णात्मकं with A and B. l. 2, निराकरणार्थं, B निरासार्थं; cf. below. l. 13.—तु, B च. l. 14, विप्रतिपत्तिनिरासार्थं ; B adds (विप्रपत्तिनिरासार्थं) तथाऽभ्रा-न्तग्रहणेनाप्यनुमाने निवर्तिते कल्पनापोढग्रहणं विप्रतिपत्तिनिरासार्थम्. l. 15, स्वप्रतिभासे ऽनर्थे ऽध्यवसायेन, B स्वप्रतिभासो ( ? स्वप्रतिभासे ) र्थे र्थाध्यावसायेन.

p. 10, l. 2, अभिलाप्यते, B अभिलप्यते ; A's reading is also corrected to this.—अभिलापेन संसर्गः, B adds अभिलाप-संसर्गः. l. 4, प्रौलनं, write मीलनं with A and B.—अभिधेया-भिधानयोः, B अभिधानाभिधेययोः. l. 5, संनिविष्टौ, B निविष्टौ. l. 6, अभिधेयाभासः, B अभिधेयाकारभासः. l. 7, अभिलापेन. B अभिलाप०. l. 8, B omits भवति. l. 10, ०संसृष्टाभासा, B ०सं-सृष्टप्रभासा ( ? ०संसृष्टप्रतिभासा ). l. 11, संगृह्येत, B संगृह्यते. l. 12, ०आभासा, B प्रतिभासा.—तदव्युत्पन्नस्य, B adds बालकस्य. l. 15, योग्यता०, B योग्यत्व०. l. 16, ०प्रतिभासत्वं, B प्रतिभासत्वे.

p. 11, l. 5, संनिहितमात्र०, B संनिहितार्थमात्र०. l. 12,

श्रोत्रज्ञानं, B श्रोत्रविज्ञानं.—शब्दस्वलक्षणग्राहि, B omits शब्द.—शब्दस्वलक्षणं, B शब्दे स्वलक्षणं च. l. 18, ०ज्ञानं, B ०विज्ञानं as in l, 12. l. 22, परेण, B adds सूत्रेण ( MS. मूत्रेण ).

p. 12, l. 3, विभ्रम०, B भ्रम०. l. 4, मन्दं, B adds हि.—भ्रम्यमाणे, B भ्राम्यमाणे. l. 5, विभ्रम०, A भ्रम०. l. 9, ज्वलित०, B ज्वलितरूपं.—B आध्यात्मिकं भ्रांतिकारणं. l. 11, इन्द्रियभ्रान्त्ययोगात्, B omits इन्द्रिय. l. 14, B omits हि.—अलातादौ, B अलाते. l. 17, तैः, B एतैः.—तथाविधं, B तत्तथाविधं ; तत् is also supplied in margin of A. l. 20, निराकरणार्थं, B ०निरासार्थं. l. 22, मानसप्रत्यक्षे, B मानसे च प्रत्यक्षे.

p. 13, l. 2, ०ज्ञानस्य, B ०विज्ञानस्य.—अन्तरमस्येति, B adds अनन्तरः. l. 9, विषयविज्ञानाभ्यां हि मनोविज्ञानं, B विषयविज्ञानाभ्यां मनोविज्ञानाभ्यां मनोविज्ञानं &c.— तदनयोर्न परस्परसहकारित्वं, B तदनयोः परस्परस्य सहकारित्वं. l. 12, B omits ज्ञातं.—B omits second असौ. l. 15, प्रत्यक्षमित्युक्तं, A प्रत्युक्तं, corrected into प्रत्यक्षमित्युक्तं.—B omits इति. l. 22, विज्ञानस्य, B ज्ञानस्य.

p. 14, l. 4, B has the pratika सर्वचित्तेत्यादि. l. 11, वस्तु ग्राह्यं, B ग्राह्यं वस्तु. l. 12, सातरूपेण, B सातानुरूपेण. l. 13, सातादिरूपः, B सतरूपः.—स्यात्, B adds तदा. l. 17, ज्ञानानुभवः —तच्च ज्ञानरूपं वेदनं. B तत्त्वज्ञानस्वरूपवेदनं. l. 21, भावनायाः, B भावनयो ( sic ).— आभासस्य, B अवभासस्य.

p. 15, l. 1, ०गतिः, B ०गमनं. l. 12, B omits अर्थं. l. 13, अस्फुटाभत्वात्, B adds एव च. l. 16, परिसमाप्त्यर्थः, B परिसमाप्तिवचनं. l. 18, चतुर्विध०, B चतुर्विधस्य. l. 21, प्रमाणस्य विषयः, B विषयः प्रमाणस्य.

p. 16, l. 4, अनर्थाध्यवसायेन, read अर्थाध्यवसायेन with B. l. 12, ज्ञानस्य, B ज्ञान०. l. 13, सन्, read स with B. l. 20, स च, B स एव च,

p. 17, l. 11, B has the pratika अन्यदित्यादि.—तत्सामान्य-लक्षणं, B तस्मात्सामान्यलक्षणं. l. 18, the clause ततस्तत्सामान्य-लक्षणं is omitted in A, but is supplied in the margin; B ततस्तस्मात्सामान्यलक्षणं.

p. 18, l. 9, अर्थात्, B प्राथादर्थात्. l. 13, अर्थदर्शन० B अर्थ-प्रदर्शन०. l. 16, B repeats यद् before सादृश्य. l. 17, ज्ञानं, B विज्ञानं. l. 18, तच्च सादृश्यं, B तच्च सारूप्यं सादृश्यं.

p. 19, l. 2, तत्सिद्धेः, B ततः सिद्धेः. l. 5, विज्ञानं, B ज्ञानं. l. 12, ज्ञानस्य, B adds इति.

p. 20, l. 3, ०रूपत्वं, read रूपं with B. l. 5, व्यवस्थाप्यमाने, B व्यवस्थाप्यमाने. l. 8, दर्शनं, B अदर्शनं (०त्वेनादर्शनं). l. 9, B omits तु. l. 11, अवस्यन्ति, B अध्यवस्यन्ति. The colophon in B is इति आचार्यधर्म्मोत्तरविरचितायां न्यायविन्दुटीकायां प्रत्यक्षपरि-च्छेद; प्रथमः; A adds to colophon the words मङ्गलमस्तु.

p. 21, l. व्याख्यातुं, B व्याख्यातुकामः. l. 7, ०निर्देशात्क्रमेव, A. निर्देशार्थमेव.

p. 22, l. 2, B has the pratika प्रमाणफलमिति. l. 3, प्रत्यक्ष-वत्प्रत्यक्ष इव, MSS. प्रत्यक्ष इव प्रत्यक्षवत्; it was perhaps unnecessary to make the correction. l. 8, B omits अस्य. l. 14, A omits तद्. l. 20, A omits अर्थ; it is supplied in margin.

p. 23, l. 2, निरस्तं, B निषिद्धं. l. 3, पक्षैकदेशासिद्धः, B adds निरस्तो हेतुः. l. 7, कुर्यात्, B ब्रूयात्. l. 11, साधारणानैकान्तिकः,

B adds अनित्यः शब्दः प्रमेयत्वात्. l. 12, सपक्षव्यापिसत्ताकस्य so B; A writes सपक्षऽव्यापिसत्ताकस्य with what looks like a correction of सपक्ष into सपक्षा. l. 14. तु, A हि. l. 15, निश्चितवचनेन, A निश्चयवचनेन. l. 19, निरासः, B adds नित्यः शब्दः कृतकत्वात् खवत्, compare l. 11, above various reading. l. 22, असत्त्ववचनात्, B असत्त्वशब्दात्.

p. 24, l. 2, B omits अपि. l. 6, तदुच्यते, B उच्यते. l. 7, द्वयोरप्युपादानम्, B omits अपि. l. 8, अनियमे, B अनियते. l. 9, स हेतुरिति, A omits स; it is supplied in the margin. l. 13, प्रयोक्तव्यः, A कर्तव्यः. l. 22, स सपक्ष; A omits स.

p. 25, l. 1, सशब्दादेशः, A शब्दादेशः corrected in the margin to सशब्दादेशः.—सामान्यं, B साम्यं. l. 8, तेन च, B omits च.—तद्विरुद्धत्वं, B च विरुद्धत्वं.

p. 26, l. 1, उपलब्धिर्ज्ञानम्। तस्या लक्षणं जनिका सामग्री, A उपलब्धिज्ञानं तस्य लक्षणं। जनिका सामग्री. l. 10, कथ्यते, B गम्यते. l. 13, दृश्यं, B दृश्यत्वं. l. 14, घटविविक्त०, B घटादिविविक्त०. l. 16, वस्तु न निश्चितं तज्ज्ञानं च, B वस्तु तज्ज्ञानं चा (sic) न निश्चतं. l. 19, ततो दृश्यघटरहितः, B तादृशघटरहितः.

p. 27, l. 13, अतस्य संनिहिताय स्वर्यं प्रवृत्तः सः, so A, writing आतस्य for अतस्य, and संनिहिता, corrected into संनिहिताय in the margin; B अतस्य सन्निहिता यद्द्रयं प्रवृत्ताः (sic) स. l. 17, शक्यो स्वयं शक्यो; B omits the numbers in this para. l. 19, स्वभावमुदाहर्तुमाह, B adds स्वभावेत्यादि. l. 20, साध्यस्यैव स्वभावः, B साध्यस्य भावः.

p. 18, l. 1, A omits स. l. 4, शिंशप०, A writes सिंसप in

the first place and शिंशप in the second; so also in the next line प्रचुरशिंसपे, but अविदितशिंशपा०. l. 6, यदा, B यथा. —उपादर्शं, B उपदर्श्य. l. 7, वृत्तव्यवहारनिमित्तं, B वृत्तव्यवहारस्य निमित्तं. l. 8, शिंशपां पश्यति, B पश्यति शिंशपां.—अवृत्तं, A अवृत्तत्वं. l. 9, B puts the stop after स मूढः. l. 12, अग्निरिति, A वह्निरिति. l. 13, प्रत्यक्षानुपलम्भनिबन्धनः, B प्रत्यक्षानुपलंभः निबंधनं. l. 15, अयुक्तं, A युक्तं. l. 17, अत्रेति एषु, B अत्रेति अत्र. l. 18, B omits साधर्म्यं. l. 19, B omits the first अभावः.

p. 29, l. 1, परस्पर०, B परस्परं. l. 3, हेतवः, B adds अपि. l. 8, कारणे, B कारण०. l. 15, ०अभावः, B ०अभावात्. l. 16, अप्रतिबद्ध०, B अप्रतिबंध०. l. 18, न प्रतिबद्धः; B omits न. — अप्रतिबद्ध०, B अप्रतिबंध०. l. 23, अविनाभावनिश्चयः, B अविनाभावित्वनिश्चयः.

p. 30, l. 3, क्व. B कः. l. 13, लिङ्गस्येत्याह, B लिंगस्य न वस्तुन इत्याह. l. 14, B omits अर्थ आत्मा. l. 15, तादात्म्यं, B adds तत्स्वभावत्वं. l. 16, तत्र, B तत्तत्र. l. 19, निश्चयापेक्ष एव, B निश्चयापेक्षया एवं. l. 20, ०अपेक्षः, B अपेक्षया. l. 23, लिङ्गस्य, B adds स्यात्.

p. 32, l. 3, एकैकस्य, B एकस्य. l. 6, स्वभावविशेषविप्रकृष्टाः, B स्वभावविशेषरहिताः. l. 14, अमूढेति, B अमूढेत्यादि. l. 17, एकज्ञानसंसर्गिणि, B adds भूतले. l. 18, दृश्यतया, B दृश्यमानतया. l. 19, ०संसर्गौ, B ०संसर्गात्. l. 20, समग्र०, B समय०.

p. 33, l. 6, B omits तु. l. 13, B omits न. l. 20, A and B omit first न; it is supplied in the margin in A.

p. 34, l. 2, B omits इति.—स्फुटं, A स्फुटः. l. 5, अनुपलभ्यमानत्वात्, A अनुपलभ्यमानत्वात्. l. 8, निःशङ्कगमनागमन०, B निःशंकगमागम०. l. 10, तदेवमेतस्य, B तदेव तस्य.—०व्यवहारस्य, A

व्यवहार॰. l. 18, A omits अभावं. l. 19, अज्ञातं करोति. l. 21, प्रवर्तिनो, so B; A apparently reads प्रवर्तनमुपल॰, which has been corrected into प्रवर्तन्युपल॰ (sic).

p. 35, l. 5, एकादश प्रकारा अस्या इत्येकादशप्रकारा, B एकादश-प्रकारा एकादश प्रकारा अस्य इत्येकादशप्रकारा. l. 9, ॰भेदात्, A ॰भेद॰. l. 21, धवलगृह॰, B धवलगृहस्य.

p. 36, l. 3, B omits च. l. 4, A तद्गृहांगणादेशेन भ (sic) वह्निना, B तद्गृहांगणस्थेन च. — तद्देशः, B seems to write तादृशः. l. 7, दृश्यमानादृश्यमानाकाशदेशावयवः, A दृश्यमानाकारो (sic) देशावयवः. l. 17, शिंशपात्वस्य, B शिंशपात्व॰. l. 21, न यः, B यो न.

p. 37, l. 2, तादृशे, A तादृश॰. l. 4, प्रतिषेध्यस्य, A प्रतिषेध्य॰. —B omits यथेति. l. 5, A omits इति, writing, however, न शीतस्पर्श (sic). l. 7, दृश्ये, A दृश्यो, B दृश्ये तु. l. 8, दूरस्थत्वात्, B दूरत्वात्. l. 13, विरुद्ध॰, A विरोध॰. l. 14, तत्र, A यत्र. l. 16, ॰निवृत्तिमनुमिमीते, A ॰निवृत्तिरनुमीयते. l. 17, सर्वापवरक॰, B. सर्वोपवरक॰. l. 20, भवतीति, B omits इति.

p. 38, l. 1, जननात्, B जनकात्. l. 2, विनश्वरः। तस्य, A विनश्व-रस्य. l. 3, नामाश्रव॰, B नाश्रव॰. l. 4, रज्जनादि॰, B रजकादि॰. l. 7, B omits च. l. 10, दृश्यतया, A तया. l. 11, यत एवं, A य एवं. l. 13, दृश्यमानात्मत्वं, B दृश्यमानात्मकत्वं. l. 15, यदि दृश्यघटात्मत्व॰, B यदेव दृश्यघटात्मकत्व॰.—दृश्यात्मत्वम्, B दृश्यात्मत्वम्. l. 16, यद्ययं, B adds घटः. l. 20, प्रतिषेधः. B निषेधः.

p. 39, l. 3, न तानि सन्तीति, B तानि न संती (sic). l. 10, वक्षेः, B अपेः, l. 13, तथा, B तथा च. l. 14, B omits च. l. 17, विशिष्ट॰, B विशिष्टे. l. 20, दृश्यं न भवति, B अदृश्यं भवति.

p. 40, l. 1, B omits तत्र.—दृश्यः, B दृश्यते. l. 2, प्रतिषेध्यते, B प्रतिषिध्यते.—ज्वलितः, B प्रज्वलितः l. 3, इन्धन, B वन. l. 8, विशिष्यन्ते, B विशेष्यंते; so also in l. 10.—B omits तत्. l. 18, A ०भाव (sic), B भावं. l. 21, देशः, B प्रदेशः. l. 23, B omits रोमहर्षादिविशेषयुक्तं.

p. 41, l. 1, ०विशेषयुक्त०, B ०विशेषगुणयुक्त०. l. 2, रोमहर्षादि०, B रोमहर्ष०. l. 5, तत्र, A यत्र. l. 7, तस्मिन्देशे, B तद्देशे. l. 8, धूममात्रेण तु, A omits तु. l. 10, B omits विशेष; A omits न. l. 13, ०प्रयोगान्ताः, A प्रयोक्तांन (sic), B प्रकांता. l. 16, सत्याह, A त्याह (sic).—B omits सति; cf. next line. l. 19, दृश्यग्रह णानुदाहरण०, B दृश्यग्रहणोदाहरण०.

p. 42, l. 3, अर्थान्तरविधीत्यादि, MSS. अर्थांतरविधीति.—प्रतिषेध्यादर्थादर्थान्तरस्य, B प्रतिषेध्यादर्थांतरस्य. l. 11, प्रयोगभेदेन भेदः. l. 12, शब्दस्य, B शब्दस्तु. l. 13, ०घटितानां. B परिघटितानां. l. 16, B प्रयोगभेदादेव भेदः, B omits, इति शब्दः. l. 20, प्रतिषेधः, B निषेधः.

p. 43, l. 1, तस्य च व्यवहारः, B तद्व्यवहारस्य. l. 4, अनुपलब्धौ, B adds सत्यां. l. 5, दृश्यानामेव B दृश्यमानानामेव.—B omits स. l. 22, M A the words एव वे, to and including अभावेन, l. 23, are supplied in the margin.

p. 44, l. 3, विरोधः, B adds च. l. 10, ०प्रतीतौ प्रतीतः, B omits प्रतीतः. l. 14, तथा च सति, B तेषां च सति. l. 17, संप्रति नास्ति, B संप्रतितनी.

p. 45, अदृश्यानुपलब्धिः, B adds तु.—B omits च. l. 9, B omits सा.—लक्षणा, A writes लक्षणा। न व्याप०. l. 17, न तु, B न च.

p. 46, l. 3, तल्लिङ्गं, A लिङ्गं. l. 6, A omits च. l. 9, ०अन्यगतं,

B ०त्मना. l. 12, औपचारिकं, A औपचारकं. l. 17, प्रतिपादितं, B adds भवति. l. 18, व्याख्येयं, B च व्याख्येयं.

p. 47, l. 3, B omits तद्विविधमिति. l. 8, A साधर्म्यवद्वैविध्य-वन्वेति. l. 9, धर्मोऽस्य; A writes यद्य (sic) for यस्य; B धर्मोस्य. l. 12, B omits a line here, writing साधर्म्यमभिधेयं यस्य तु वैधर्म्यमभिधेयं. l. 14, A writes शब्दः। तच्च. l. 20, B अर्थः प्रयोजनं यत्प्रयोजनं प्रकाशयितव्यं वस्तु उद्दिश्य. l. 21, A प्रकाशयितव्यवस्तु.—अनयोः, B नानयोः.

p. 48, l. 15, उदाहरन्, B उदाहरणमुदाहर्तुं. l. 17, B omits सिद्धः. l. 18, ०योग्यत्वस्य, B योग्यत्वे. l. 21, व्याप्तिः, A व्याप्ति०. l. 22, च, A वा.

p. 49, l. 6, ०मात्र०, B ०मात्रः.

p. 50, l. 1, प्रयोगः सविशेषणं, B प्रयोगस्य विशेषणं. l. 3, यस्य, B स यस्य.—A repeats the pratika यदुत्पत्तिमदिति after उत्पत्तिमत्. l. 4, ०विधेः, B ०विधिः. l. 11, A अनियतत्वे.

p. 51, l. 4, न, B adds च.—विशेषणं, B विशेषणपदं. l. 8, B omits च. l. 9, प्रत्ययभेदभेदिशब्दे B. प्रत्ययभेदशब्दे. l. 16, B omits second साध्यते. l. 19, ०प्रयोगः. B ०योगः. l. 20, एवमर्थं, B एतदर्थं.

p. 52, l. 2, गमकत्वात्, A गमत्वात्. l. 6, B omits इति.—B omits साध्यधर्मस्य. l. 12, B omits हि, l. 15, स्मृतमर्थं, B स्मृतमर्थाय.

p. 53, l. 6, इह, B एव. l. 8, ०अनुबन्धस्य स्वभावः, B ०अनुबंधवांच भावः. l. 11, साध्यसाधनयोः, B साध्यसाधन०. l. 18, अनुबन्धेव, B अनुबंधे च. l. 19, A स तन्निष्पत्तावनिष्पन्नस्य साधन० ।

p. 54, l. 10, स्वभावः। स एव च साध्यः। तथा च सिद्धसाधन०, B यः

स्वभावः स एव च साध्यस्वभावः सिद्धसाधन॰. l. 11, स्वभावहेतवः, B स्वभावे स्वभावहेतवः. l. 13, अग्नेः, B अग्नि॰. l. 18, कार्यहेतौ, B कार्यहेतोः. l. 19, कार्यकारणत्व॰, B कार्यकारणभाव॰.

p. 55, l. 6, A omits हेतुरपि. l. 9, नियतः, B नियमः. l. 12, नियतः, B नियमः. l. 16, निवृत्तः, B निवर्त्तते. l. 17, वैधर्म्यप्रयोगं, B वैधर्म्यवत्प्रयोगम्.— l. 20, साधर्म्यवति व्यतिरेकः, B साधर्म्यव्यतिरेकः.

p. 56, l. 1, B omits इति. l. 2, B तथाप्यन्वयवचनसामर्थ्यात्. l. 3, A व्यतिरेक॰. l. 4, B. बुद्ध्यवसितस्य. l. 10, B omits ते. l. 13, A साध्यसत्वं. l. 19, B सर्वस्य प्रतिबद्धस्य.

p. 57, l. 4, B omits तत्. l. 5, B तेनाच्छिन्नं प्रतिबन्धोपदर्शनं तदेवान्वयवचनं. l. 9, निवर्त्यनिवर्तक॰, B निवर्त्यनिवर्तकयोः. l. 11, अन्वये, B adds अपि. l. 14, A इतिकरणो हेतौ. l. 17, B omits तु. l. 19, उक्तेन, B युक्तेन.

p. 58, l. 1, A व्याप्तिप्रतिपद्यमानेन. l. 3, A omits प्रतीतेः. l. 5, B is corrupt, or has a lacuna from प्रयोगयोः to घट इति भवति. l. 9, यदुपलब्धिलक्षणप्राप्तमिति, B यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यत इति.

p. 59, l. 5, A साध्यत्वेनैवाश्रयमिति. l. 7, अर्थः, B अर्थो यः. l. 10, असाध्यं केचित्साध्यं साध्यं चासाध्यं प्रतिपन्नाः, B असाध्यं किंचित्साध्यं साध्यं चासाध्यं केचित्प्रतिपन्नाः. l. 15, तत्किमर्थं, B तत्कार्यं. l. 19, B omits च. l. 20 उदाहरति, B adds यथेति.

p. 60, l. 5, तृतीयान्तस्यार्थे वर्तते, B तृतीयान्तस्यार्थेन युक्तः. l. 7, B omits एव. l. 10, B omits अपि. l. 13, B omits धर्मः. l. 15, साध्यत्व॰, B साध्यत्वस्य.—चेदं, B चैतत्.

p. 61, l. 2, B omits second तस्य l. 17, B omits तत. l. 18, B omits ते.

p. 62, l. 1, B omits अनुक्ता. l. 5, प्रयत्नासनादिषु, A प्रयत्नादिषु. l. 6, A, आत्मार्थत्वेन प्रसिद्धः (omitting अन्वयः ). l. 7, B परार्थमात्रेण. l. 9, B omits परस्य. l. 14, अनिराकृतः, A अनिकृतः. l. 16, प्रदर्शनाय, B प्रतिपादनाय. l. 19, न स पक्षः, B स न पक्षः.—प्रत्यक्षनिराकृतः, B omits प्रत्यक्ष.

p. 63, l. 8, विकल्पविज्ञानविषयत्वेन, A विकल्पविज्ञानेन. l. 9, ०विकल्पज्ञानग्राह्यं, A ज्ञानग्राह्यं. l. 23, ब्रवीमिति वक्ति, B ब्रवीति वक्ति.

p. 64, l. 1, A writes तद्येतद्. l. 2, A असत्यानि. l. 5, तथा, A यथा. l. 8, आदर्शयता, A आदर्शयिता. l. 9, शाब्दस्य, B शब्दस्य. l. 10, B असन्नर्थो ग्राह्य, A असन् ग्राह्य. l. 12, शाब्दप्रत्ययार्थस्य, A शब्दप्रत्ययार्थस्य.

p. 65, l. 2, शब्दप्रयोगः, B omits the next two lines, going on to पूर्वकमेव; the copyist's eye has wandered from the one शब्दप्रयोगः to the other. l. 3, शब्दः, A writes टब्दः. l. 6, एवं; B adds च. l. 9, अनन्तरोक्तक्रमेण, B अनन्तरोक्तेन क्रमेण. l. 16, असाधनं, A adds the figure 2. l. 17, वा, A adds the figure 4.—निराकृतः, A adds the figure 5.

p. 66, l. 2 एतद्, तद्. l. 3, प्रतिरूपकं, B प्रतिरूपं. l. 4, A writes विवक्षं. l. 11, कस्य, B कस्यैकस्य.—वा किं०, A वाक्यं. l. 17, अनित्यः, B नित्यः. l. 18, B writes द्वयोर्द्वयोरपि. l. 22, चायच्च, B adds तत्र विज्ञान (sic) चेक्षुरादि जनित (sic).

p. 67, l. 1, B writes कार्यान्तभूतं l. 2, B writes उच्यते. l. 3, आयुरिह । तेषां, B आयुः । इह तेषां. l. 6, असंभवात्, B अभावात्. l. 10, विज्ञानसत्तया, A विज्ञानसत्ताया, so also in

next line. l. 11, ततः, A तत्र. l. 14, हेतुभूतं. A writes हेतुश्चाप्ततं (sic).

p. 68, l. 1, परार्थो हि, B परार्थोहि. *l. 5, प्रमाणं, B प्रमाण्यं.* l. 6, स्यात्, B adds तदा. l. 14, A writes बाध्यादिह्यमाना. l. 17, A writes गक.

p. 69, l. 1, A writes तदघात. l. 5, केकायितापातविभ्रमः, B केकायितापातनिकुंजे विभ्रमः. l. 6, अस्मात्, B अन्यस्मात्.

p. 70, l. 2, B omits नित्यत्वं. l. 4, ग्रह्यते, B ग्रह्यंते. l. 8, A writes विद्युदाकाशघटवत्. l. 9, नाकाशादौ, B omits what follows down to the second नाकाशादौ, by a copyist's error.

p. 71, l. 4, संदिग्धा, B संदिग्ध॰. l. 7, B omits च. l. 9, एवंजातीयस्य, B एवंजातीयकस्य. l. 11, संशयहेतुः, B संदेहहेतुः (sic). l. 13, सर्वज्ञे, B संदिग्धे. l. 17, न स वक्ता, B स वक्ता न. l. 18, साधनाभावेन, B साधर्म्यभावेन. l. 20, सिध्यति, B adds इति. l. 22, स्तीति । यस्मात्, B हियंस्मात् ।

p. 72, l. 18, आक्रामन्, B आक्रामयन्. l. 21, असामर्थ्यं, A writes असमर्थ्यं, B असमर्थं.

p. 73, l. 2, अन्धकारान्तरासमर्थः, B अन्धकारान्तराजननासमर्थः (correct अन्धकारान्तरजननासमर्थः). l. 3, असमर्थावस्था॰, B असामर्थ्यावस्था॰. l. 5, संतानयोः, A writes संतनयोः. l. 12, तद्विवर्तिनः A तद्विवर्त्तिनः. l. 14, अन्धकाराक्रान्तायां, A writes अंधकारायाक्रांतायां. l. 15, ॰हेतुत्वतं B ॰हेतुत्वक्षतं. l. 16, भवता, A B भवतः.

p. 74, l. 14, विरोधौ, B विरोधो.—कः कस्य. l. 21, नित्यत्वे, A B नित्यत्व.

p. 75, l, परस्परपरिहारेण, B परस्परेण. l. 3, वस्तुतत्त्वं, A

writes स्तुतत्वं. l. 13, B omits प्रवृत्ति. l. 14, सद्दानवस्थान ०, B सद्दावस्थानं. l. 16, द्विविधः, A द्विरोधः.

p. 76, l. 2, विरोधाच्च, B omits च. l. 6, निवर्त्य०, A निर्वर्त्य०. l. 10, वचनादि०, B वचन०. l. 17, तस्मादसर्वज्ञत्वविपर्ययादिपच्चात् &c., B तस्मादसर्वज्ञत्वावीतरागत्वविपर्ययात् (sic) विपच्चात्सर्वज्ञत्वावीतरागादिमत्त्वात्संदिग्धः &c.

p. 78, l. 23, परस्परस्य A परस्परस्मात्.

p. 80, l. 8, यकाभ्यां, A याभ्यां. l. 11, साधारणानैकान्तिकः, A साधारणानैकान्तिक०.—०व्यावृत्तिकः, A adds the figure 2.

p. 81, l. 7, भवन्सर्वः, A भवत् सर्वः.

p. 82, l. 9, अपरभावनिश्चयन०, A omits निश्चयन०.

p. 83, l. 2, निश्चयायोगात्, B निश्चययोगात्. l. 5, प्राणादि०, A प्रमाणादि०. l. 11, B drops a line, writing साध्यस्ये योर्हि (sic). l. 13, सिद्धिः, B असिद्धिः. l. 18, B omits वा. l. 21, A omits one येन.

p. 84, l. 2, विरुद्धं यत्, B यद्विरुद्धं l. 18, स्यात्, B स्यादेति तत्.

p. 85, l. 7, A omits तदर्थेति. l. 11, A writes ०आगमाश्रयो.

p. 86, l. 4, एकं, B एव. संबन्धिभिः, B स्वसंबन्धिभिः. l. 9, च, B वा.

p. 87, l. 1, समवायलक्षणः, A समवायलक्षण०. l. 2, तेन, B अनेन. l. 4, तत्क्रोडी०, B न क्रोडी०. l. 6, तद्देशसत्ताभावे, B तद्देशसत्ताया अभावे. l. 12, तत्तत्र, A ततत्र, B तत्र. l. 17, व्यक्तिशून्ये, A शून्ये. l. 21, B omits व्यक्त्यन्तरेषु.

p. 88, l. 1, तदागमसिद्धस्य, A तदागममसि० (sic), B तस्मादागम०. l. 2, सर्वगतत्वासर्वगतत्वयोः, B सर्वगतत्वयोः. l. 3, अभिसंबन्धित्वं, B अभिसंबद्धत्वं l. 6, उक्ता विरुद्ध०, B उक्तौ। इह विरुद्ध०. l. 7, न च वस्तुन्यस्य, B न वस्तुन्यस्य हेतोः. l. 10, B omits उक्तः. l. 11, तावतैवेति, A

तावता चेति. l. 12, अतः, B ततः. l. 13, तद्दचनं, B ततस्तद्दचनं. l. 18, B omits इति.

p. 89, l. 2, A omits ज्ञानं. l. 3, अभेदेनोक्तं, B उक्तमभेदेन. l. 5, B omits यत्. l. 9, विज्ञाते, B ज्ञाते. l. 12, B तस्य, B साधनमात्रस्य. l. 18, एवं B adds च.

p. 90, l. 1, इतरच्च, A adds इति. l. 5, साधर्म्य॰, B साधर्म्ये. l. 8, सदसत्त्वे, A adds the figure 2. l. 17 साधर्म्य॰, B साध्य॰. l. 21, दृष्टान्तव्यतिरेकेण, B दृष्टान्तमन्तरेण. l. 22, B puts the न before हेतोः.

p. 91, l. 5, प्रदर्शनः, A writes प्रदर्षिन, (as it always writes दर्षयिता). B दर्शकः.—प्रदर्षिते, B दर्षिते. l. 9, B omits वैधर्म्य-दृष्टान्तस्य तत. l. 11, दृष्टान्तस्य दोषाः A is defective from here; at the end of the line दोषा is wanting: B दृष्टान्त-दोषा. l. 13, omits दृष्टान्तः. l. 14, उक्तं भवति, B इत्येतदुक्तं भवति. l. 16, शब्दस्य नित्यत्वे साध्ये, B नित्यत्वे साध्ये शब्दस्य.

p. 92, l. 15, रागादिमत्त्वं, A रागादिमत्त्वे. l. 18, गृह्यते, B संगृह्यते. l. 18, वाद्यपि, A विद्यपि. l. 22, B omits अत्र.

p. 93, l. 2, शक्यः, B शक्यते.—अनित्यत्व॰, B अनित्य. l. 4, अनित्यत्व॰, B अनित्यत्वे. l. 5, दृष्टान्तः; B goes on to तदर्थेन, 10, from a common cause of error. l. 6, प्रदर्शितान्वयः is from conjecture, the mutilated line breaking off at प्र. l. 22, A omits तथाप्यनियतं.

p. 94, l. 1, वक्तृदोषात्, A writes वक्त दोषात्, B वक्तृदोषात्. l. 2, नत्र दृष्टान्त॰, B तद्दृष्टान्त॰. l. 4, नत्र, B अपि.—वक्तुमाह, B वक्तुकाम आह. l. 5, परमाणुवत्, B परमाणु॰. l. 9, द्रव्यभावः, B मिव्रत्ताभावः (sic).

| Size. | Contents. | Per unit of 96 or 100 pages. |
|---|---|---|
| Demy octavo .. | Oriental text only .. .. | Rs. 0-12-0 |
| | Text and translation, English notes, etc., mixed; or translation only .. .. | „ 1-0-0 |
| Royal octavo .. | Oriental text only .. .. | „ 1-0-0 |
| | Text and translation, English notes, etc., mixed; or translation only .. .. | „ 1-4-0 |
| Quarto .. | Oriental text only .. .. | „ 2-0-0 |
| | Text and translation, English notes, etc., mixed; or translation only .. .. | „ 2-8-0 |

There are some exceptions to this scale, which in each case will be indicated in the price lists. For the calculation of prices each part of a unit in excess of the 96 or 100 pages counts again as a full unit.

Single issues may be bought separately, but three years after the completion of a work no complete sets are broken for the sale of loose component parts.

Each issue bears, besides its issue number, a fascicle number indicating its place in the work and volume to which it belongs.

**With the issue of this Notice all previous prices and price lists are cancelled.**

CALCUTTA,
*1st January*, 1929.

The publications or information about them are obtainable from the Asiatic Society of Bengal, No. 1, Park Street, Calcutta, or from the Society's Agents :—

MESSRS. LUZAC & CO., 46, Great Russell Street, London, W.C.

M. PAUL GEUTHNER, 13, Rue Jacob, Paris, VI^e^.

BUCHHANDLUNG OTTO HARRASSOWITZ, 14, Querstrasse, Leipzig.

MESSRS. THACKER, SPINK & CO 3, Esplanade East, Calcutta.

*Residents of Europe should order from the Agents.*

When ordering direct from the Society the following rules should be observed :—

Orders should be addressed to the Asiatic Society of Bengal and not to any Official by name or title.

All Cheques, Money Orders, etc., should be made payable to the "Treasurer, Asiatic Society of Bengal."

Orders for books should be accompanied by a full name and address, legibly written, and should be sent on a separate sheet of paper containing no other communication.

In India books are supplied by V.-P.P.

